# ॥ ललितापञ्चकम्॥

प्रातः स्मरामि ललितावदनारविन्दं
बिम्बाधरं पृथुलमौक्तिकशोभिनासम् ।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं
मन्दस्मितं मृगमदोज्ज्वलफालदेशम् ॥१॥

प्रातर्भजामि ललिताभुजकल्पवल्लीं
रत्नाङ्गुळीयलसदङ्गुलिपल्लवाढ्याम् ।
माणिक्यहेमवलयाङ्गदशोभमानां
पुण्ड्रेक्षुचापकुसुमेषुसृणीः दधानाम् ॥२॥

प्रातर्नमामि ललिताचरणारविन्दं
भक्तेष्टदाननिरतं भवसिन्धुपोतम् ।
पद्मासनादिसुरनायकपूजनीयं
पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ॥३॥

प्रातः स्तुवे परशिवां ललितां भवानीं

त्रय्यन्तवेद्यविभवां करुणानवद्याम् ।

विश्वस्य सृष्टविलयस्थितिहेतुभूतां

विश्वेश्वरीं निगमवाङ्मनसातिदूराम् ॥४॥

प्रातर्वदामि ललिते तव पुण्यनाम

कामेश्वरीति कमलेति महेश्वरीति ।

श्रीशाम्भवीति जगतां जननी परेति

वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥५॥

यः श्लोकपञ्चकमिदं ललिताम्बिकायाः

सौभाग्यदं सुललितं पठति प्रभाते ।

तस्मै ददाति ललिता झटिति प्रसन्ना

विद्यां श्रियं विमलसौख्यमनन्तकीर्तिम् ॥६॥

॥ इति श्रीमच्छङ्करभगवतः कृतौ ललिता पञ्चरत्नम् सम्पूर्णम्॥